॥ श्रीगोपालो विजयतेतराम् ॥

वेदोक्त

# देवर्षि-पितृ-तर्पणम्

सेखावाट्यांतर्गत फतेपुर गौड़ः यजुर्वेदान्तर्गत माध्यंदिनि शाखाध्यायिनः शाण्डिल्य गोत्रोत्पन्न हरितवाल वंशावतंस व्रजलालीय धर्मोपदेशक वैद्यभूषण शास्त्री वैजनाथ मिश्र उज्जैन निवासिना संग्रहीतम्।

—०:०—

तदिदम्—

**मुन्शी बाबू आनन्दीलाल बुक्सेलरेण**

उज्जैन निवासिना

स्वकीय प्रबन्धेन प्रकाशितम।

—○:○—

प्रथमावृत्तिः [ सं० १९८६ [

…मः।

…ाय नमः।

… नमः।

10·2

॥ अथ ॥

# ॥ तर्पणाञ्जलि प्रारम्भः ॥



आदौ प्रणम्य गोपालं देवीं शाकम्भरीं ततः ।
लिख्यते वैद्यनाथेन मञ्जुला तर्पणाञ्जलिः ॥१॥

अथ [illegible]णप्रयोगः ।

अपवित्रः पवि[illegible]ा वा सर्वाऽवस्थांगतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥

आचम्य प्राणानायम्य ।

ॐ केशवाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा। ॐ माधवाय नमः स्वाहा।

( इति [illegible]िवेत )

'हस्तप्रक्षालनम्'

ओं गोविन्दाय नमः । ओं विष्णवे नमः ।
ओं मधुसूदनाय नमः। ओं त्रिविक्रमाय नमः।
ओं वामनाय नमः । ओं श्रीधराय नमः ।

ओं हृषीकेशाय नमः। ओं पद्मनाभाय नमः।
ओं दामोदराय नमः। ओं सङ्कर्षणाय नमः।

आस्यप्रोक्षणं ॥

ओं वासुदेवाय नमः ।

दक्षिण नासापुटस्पर्शनम् ।

ओं प्रद्युम्नाय नमः ।

वाम नासापुटस्पर्शनम् ।

ओं अनिरुद्धाय नमः ।

दक्षिण नेत्रस्पर्शनम् ।

ओं पुरुषोत्तमाय नमः ।

वाम नेत्रस्पर्शनम् ।

ओं अधोक्षजाय नमः ।

दक्षिण कर्णस्पर्शनम् ।

ओं नारसिंहाय नमः ।

वाम कर्ण स्पर्शनम् ।

ओं अच्युताय नमः ।

नाभिस्पर्शनम् ।

ओं जनार्दनाय नमः ।

हृदयस्पर्शनम् ।

ओं उपेन्द्राय नमः ।

मस्तकस्पर्शनम् ।

ओं हरये नमः ।

दक्षिण बाहुस्पर्शनम् ।

ओं श्रीकृष्णाय नमः ।

वाम बाहुस्पर्शनम् ।

इत्याचम्य । तत्र प्राणायामः ।

प्रणवपूर्वक द्वादशाक्षर महामन्त्रस्य परब्रह्म ऋषिः । परमात्मा देवता । दैवी गायत्री छन्दः । सप्तानां व्याहृतीनां विश्वामित्र जमदग्निभरद्वाजगौतमात्रिवसिष्ठ कश्यपाऋषयः । अग्नि वायु सूर्य वृहस्पति-वरुणेन्द्र विश्वेदेवा देवताः । गायत्र्युष्णि-गनुष्टुपवृहतीपंक्तिस्त्रिष्टुब्जगत्यश्छन्दांसि । तत्सवितुरित्यस्य विश्वामित्र ऋषिः सविता देवता । गायत्रीच्छन्दः । तथा च । आपो ज्योतिरित्यस्य प्रजापतिऋषिर्ब्रह्माग्निवायु सूर्यादेवताः । यजुश्छन्दः । सर्वेषां प्राणा-यामे विनियोगः ।

ओं नमोभगवते वासुदेवाय । ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यं ओं तत्सवितुर्वरेण्यं भर्गो-देवस्य धीमहि । धियो यो नः प्रचोदयात् । ओं आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवःस्वरोम् । ओं विष्णवे नमः ।

एवं दक्षिणनासा पुट पीडयेत् । उपरि दर्शित क्रमेण ।

ओं विष्णवे नमः ।

एवं वामनासा पुट पीडयेत् ।

ओं महेश्वराय नमः ।

इति वैदिकाचमनं तथा प्राणायाम प्रयोगः ।

कुश पवित्र धारणम् ।

द्वौ दर्भौ दक्षिणहस्ते सव्ये त्रीण्यासने तथा ।
पादमूले शिखायां च सकृद्यज्ञोपवीतके ॥

कुशपवित्रं दक्षिणवामहस्तस्यानामिकायां मंत्रेण धारयेत्

तत्र मंत्रः । ओं पवित्रे स्थोवैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्म्यछिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्यते पवित्रपते पवित्र पूतस्य यत्कामः पुनेतच्छकेयम् ॥

इति मंत्रेण पवित्र धारणं कृत्वा सङ्कल्पंकुर्य्यात्।

ओं तत्सत् श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्याद्य ब्रह्मणोद्वितीय परार्द्धे श्रीश्वेतवाराह कल्पे वैवस्वत मन्वन्तरे अष्टाविंशतितमे युगे कलियुगे कलिप्रथम चरणे भरतखण्डे भारतवर्षे जम्बूद्वीपे आर्यावर्तैकदेशे अमुकनाम्नि क्षेत्रे महानद्यागोदावर्य्या (दक्षिणे उत्तरे) तीरे गंगा यमुनयो (पूर्व पश्चिमे) देशे देव ब्राह्मणानां सन्निधौ अमुक नाम्नि संवत्सरे अमुकायने श्रीसूर्ये अमुकऋतौ मासानामुत्तमे मासे अमुक मासे शुभे अमुकपक्षे अमुक तिथौ अमुक वासरे अमुक नक्षत्रे अमुक योगे अमुक करणे अमुक राशिस्थिते चन्द्रे अमुक राशि स्थिते सूर्ये अमुक राशिस्थिते देवराजगुरौ शेषेषु ग्रहेषु यथा यथा राशिस्थानस्थितेषु सत्सु एवं ग्रहगण विशेषण विशिष्टायां शुभ पुण्यतिथौ ममाऽऽत्मनः श्रुतिस्मृति पुरा[illegible]

फलप्राप्त्यर्थं अमुकगोत्रोत्पन्नः अमुकशर्माहं तत्सत्परमेश्वर प्रीत्यर्थं देवर्षिमनुष्यपितृ-तर्पणमहं करिष्ये ॥

पात्रे प्रथमं श्वेतगन्धयवान् तदभावे तण्डुलान् सुगंध पुष्पाणि तुलसीदलसहितानि निदध्यात् तदनन्तरं तत्पात्रो-परिहस्तप्रमाणान् प्रादेश प्रमाणान् वा त्रीन् कुशान् प्रागग्रान् स्थापयित्वा पश्चान्मन्त्रेण तत्पात्रं जलेन पूरयेत् ।

ओं विश्वान्देवान् भवत्सु आवाहयिष्ये।

केषाञ्चिन्मते "भवत्सु" शब्द प्रयोगः श्राद्ध कर्मणि कुर्यात् न तु तर्पणे ।

ओं आवाहय ॥ ओं विश्वेदेवा सऽआ-गत शृणुतामऽइमꣳ हवम् । एदम्बर्हिर्न्नि-षीदत ॥ विश्वेदेवाः शृणुतेमꣳ हवम्मे येऽअन्तरिक्षे यऽउपद्यविष्ठयेऽअग्नि जिह्वाऽ उतवा यजत्रा आसद्यास्मिन्बर्हिषिमादय-ध्वम् ॥

"ततो देवानामावाहनम्" (पूर्वं पात्रोपरिस्थापितान्कुशान् [तुल]सीदलसंयुक्तान् दक्षिण करसम्पुटे धृत्वा तदनन्तरं तस्यो-[पर्य]ाम हस्तमधोमुखंकृत्वा पश्चाद्देवान् आवाहयेत्) ।

ओं आगच्छन्तु महाभागा विश्वेदेवा महाबलाः। ये तर्पणेऽत्रविहिताः सावधाना भवन्तु ते॥ ओं भवामः।

केषाञ्चिन्मते 'भवामः' इति शब्द प्रयोगः श्राद्धक र्मणि कुर्यात् न तु तर्पणे।

( ब्राह्मणसर्वस्वे हलायुधः )

दीव्यते क्रीडते यस्माद्रुच्यते शोभते दिवि।
तस्माद्देव इति प्रोक्तःतपंयेत्सर्व देवताः॥

एवं पूर्व मन्त्रित जलस्य तैः (कुशैः) प्रागग्रैः पूर्वाभिमुखो दक्षिण हस्तस्य सर्वांगुल्यग्रैर्देवतीर्थेनान्यपात्रे एकैकाञ्जलिं क्षिपेत्।

ओं ब्रह्मातृप्यताम्। ओं विष्णुस्तृप्यताम्। ओं रुद्रस्तृप्यताम्। ओं प्रजापतयस्तृप्यताम्। ओं देवास्तृप्यन्ताम्। ओं छन्दांसितृप्यन्ताम्। ओं वेदास्तृप्यन्ताम्। ओं ऋषयस्तृप्यन्ताम्। ओं पुराणाचार्य्यास्तृप्यन्ताम्। ओं गन्धर्वास्तृप्यन्ताम्। ओं इतराचार्यास्तृप्यन्ताम्। ओं सम्वत्सरः सावयवास्तृप्यन्ताम्। देव्यस्तृप्यन्ताम्। ओं

अप्सरसस्तृप्यन्ताम्। ओं देवानुगास्तृप्यन्ताम्। ओं नागास्तृप्यन्ताम्। ओं सागरास्तृप्यन्ताम्। ओं पर्वतास्तृप्यन्ताम्। ओं सरितस्तृप्यन्ताम्। ओं मनुष्यास्तृप्यन्ताम्। ओं यक्षास्तृप्यन्ताम्। ओं रक्षांसितृप्यन्ताम्। ओं पिशाचास्तृप्यन्ताम्। ओं सुपर्णास्तृप्यन्ताम्। ओं भूतानितृप्यन्ताम्। ओं पशवस्तृप्यन्ताम्। ओं वनस्पतयस्तृप्यन्ताम्। ओं ओषधयस्तृप्यन्ताम्। ओं भूतग्रामश्चतुर्विधस्तृप्यताम्। "ओं तीर्थानि तृप्यन्ताम्। ओं तीर्थदेवास्तृप्यन्ताम्। ओं विश्वेदेवास्तृप्यन्ताम्।

यथोदकेनेकैकमंजलिं देवतीर्थेन दद्यात्। ततः।

ओं मरीचिस्तृप्यताम्। ओं अत्रिस्तृप्यताम्। ओं अङ्गिरास्तृप्यताम्। ओं पुलस्त्यस्तृप्यताम्। ओं पुलहस्तृप्यताम्। ओं क्रतुस्तृप्यताम्। ओं प्रचेतास्तृप्यताम्। ओं वशिष्ठस्तृप्यताम्। ओं भृगुस्तृप्यताम्।

ताम् । ओं नारदस्तृप्यताम् ।" ओं मोद-स्तृप्यन्ताम् । ओं प्रमोदस्तृप्यताम् । ओं सुमुखास्तृप्यन्ताम् । ओं दुर्मुखास्तृप्यन्ताम् । ओं विघ्नास्तृप्यन्ताम् । ओं विघ्नकर्तारस्तृ-प्यन्ताम् ।

एवं पाठः देवतर्पणे क्वचिद्दृश्यते न तु सूत्रे । "मनुष्य देवतर्पणम्" ततो 'नीवोती' कृत्वा पूर्वोक्त कुशानुदगग्रा-न्दक्षिणहस्तस्य कनिष्ठिकामूलप्रदेशे धृत्वा पश्चादुत्तराभिमुख मनुष्यदेवेभ्यो द्वौ द्वावञ्जली कायतीर्थेन देयौ ।

"ओं सनकादयःसप्तमनुष्या आगच्छंतु गृह्णन्त्वेतां जलाञ्जलीन् ।" ओं सनकस्तृप्यतु ओं सनक० । ओं सनन्दनस्तृप्यतु । ओं सनन्दन० । ओं सनातनस्तृप्यतु । ओं सना० । ओं कपिलस्तृप्यतु । ओं कपि० । ओं आसुरिस्तृप्यतु । ओं आसुरि० । ॐ वोढुस्तृप्यतु । ॐ वोढ० । ओं पञ्चशिख-स्तृप्यतु । ओं पञ्च०

'पितृतर्पणम्' ( पूर्वोक्त कुशान्द्विभुग्नान्दक्षिणाग्रमूला-न्द्विगुणीकृतांगुष्ठतर्जनीमध्यप्रदेशे ( दक्षिणहस्तस्य ) धृत्वा

दक्षिणाभिमुखं पूर्वमन्त्रित पात्रजले अपसव्येन कृष्णानल-मिश्रणं तेन जलेनापसव्येन पितृतीर्थेन पितृन्स्त्रींस्त्रीनञ्ज-लीन् दद्यात् ।

"ॐ कव्यवाडनलादयोदिव्यपितरः आ-गच्छन्तु गृह्णन्त्वेतां जलांजलींन् ।" ॐ कव्य-वाडनलस्तृप्यताम् । ओं कव्यवा० । ओं कव्यवा०॥ ओं सोमस्तृप्यताम् । ओं सोम० ओं सोम० ॥ ओं यमस्तृप्यताम् । ओं यम० । ओं यम० ॥ ॐ अर्यमास्तृप्यताम् । ओं अर्यमा० । ओं अर्यमा० ॥ ओं अग्नि-ष्वात्ताः पितरस्तृप्यन्ताम् । ओं अग्निष्वा० । ओं अग्नि०॥ ओं सोमपाः पितरस्तृप्यन्ताम् । ओं सोमपाः । ओं सोमपाः० ॥ ओं बर्हि-षदः पितरस्तृप्यन्ताम् । ओं बर्हिषदः० । ओं बर्हिषदः पि० ।

"यमतर्पणम्"

( यमाश्चैके त्रींस्त्रीनञ्जलीन्दद्यादित्याहुः )

"ओं यमादि चतुर्दशमूर्त्तये आगच्छन्तु

रसीं

गृह्णन्त्वेताञ्जलाञ्जलीन् ।" ओं यमाय नमः । ओं यमाय० । ओं यमा० ॥ ओं धर्मराजाय नमः । ओं धर्मरा० । ओं धर्मरा०॥ ओं मृत्यवे नमः । ओं मृत्यवे० । ओं मृत्यवे०॥ ओं अन्तकाय नमः । ओं अन्तका० । ओं अन्त० ॥ ओं वैवस्वताय नमः । ओं वैव०। ओं वैव०॥ ओं कालाय नमः । ओं कालाय० ओं काला० ॥ ओं सर्वभूतक्षयाय नमः । ओं सर्वभू० । ओं सर्वभूत० । । ओं औदुम्बराय नमः । ओं औदुम्ब० । ओं औदु० ओं दध्नाय नमः । ओंदध्नाय० । ओं दध्ना०॥ ओं नीलाय नमः । ओं नीलाय० । ओं नीलाय०॥ ओं परमेष्ठिने नमः । ओं परमे० ओंपर०॥ ओं वृकोदराय नमः। ओं वृको० । ओं वृको० ॥ ओं चित्राय नमः । ओं चित्राय० । ओं चित्राय० ॥ ओं चित्रगुप्ताय नमः । ओं चित्रगु० । ओं चित्रगु० ॥

"मनुष्य पितृतर्पणम् ।"

"ओं इहागच्छन्तु मे पितर इदं गृह्णन्तु मे जलम् ।" ओं उशन्तस्त्वेति प्रजापतिर्ऋषिः पितरो देवता अनुष्टुप्छन्दः ओं आयन्तु न इत्यस्य शंखऋषिः पितरो देवतास्त्रिष्टुप्छन्दः आवाहने विनियोगः । ओं उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ॥ उशन्नुशतऽआवह पितॄन्हविषेऽअत्तवे ॥१॥ ओं आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधयामदन्तोऽधिब्रुवन्तु तेवन्त्वस्मान् ॥ २ ॥ "समस्त पितॄनावाहयिष्ये" "ओं आवाहय" ।

(स्वस्वपितॄणां गोत्रनामोच्चारं कृत्वा पितृतीर्थेन प्रत्येकं त्रींस्त्रीनञ्जलीन्दद्यात् । तर्पणं तु प्रथमा विभक्त्यान्तपदं योजयेत् )

अमुकगोत्रः अस्मत्पिता अमुक शर्मा वसुरूपस्तृप्यतां इदं जलं तस्मै स्वधानमः । ओं उदीरतामवरऽउत्परासऽउन्मध्यमाः पि-

तरः सोम्यासः। असुं यईयुरवृका ऋतज्ञास्ते-नोवन्तु पितरोहवेषु ॥ १ ॥ अमुकगोत्रः अ-स्मत्पिता अमुक शर्मा वसुरूपस्तृप्यतां इदं जलं तस्मै स्वधानमः। ओं अङ्गिरसोनः पितरोनवग्वा अथर्वाणो भृगवः सोम्यासः। तेषां वयꣳ सुमतौ यज्ञियानामपिभद्रे सौ-मनसे स्याम ॥२॥ अमुक गोत्रः अस्मत्पिता अमुक शर्मा वसुरूपस्तृप्यतां इदं जलं तस्मै स्वधानमः॥ ओं आयन्तुनः पितरः सोम्या-सोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मि-न्यज्ञे स्वधया मदन्तोधिब्रुवन्तुतेवन्त्वस्मान् ॥ ३ ॥ अमुकगोत्रः अस्मत्पितामहः अमुक शर्मा विष्णुस्वरूपस्तृप्यतां इदं जलं तस्मै स्वधानमः॥ ओं ऊर्ज्जं वहन्तीरमृतं घृत-म्पयः कीलालम्परिस्रुतम्। स्वधास्थ तर्पयत मे पितॄन्॥ ४॥ अमुक गोत्रः अस्मत्प्रपिता-महः अमुक शर्मा विष्णुस्वरूपस्तृप्यतां इदं

जलं तस्मै स्वधानमः ॥ ओं पितृभ्यः स्वधा
यिभ्यः स्वधानमः। पितामहेभ्यः स्वधायिभ्यः
स्वधानमः। प्रपितामहेभ्यः स्वधायिभ्यः
स्वधानमः ॥ अक्षन्पितरो मीमदन्त पितरोती
तृप्यन्त पितरः पितरः शुन्धध्वम् ॥ ५ ॥
अमुक गोत्रः अस्मत्पितामहः अमुक शर्मा
विष्णुस्वरूपस्तृप्यतां इदं जलं तस्मै स्वधा
नमः ॥ ओं ये चेहपितरो ये च नेहयांश्चविद्म
यां उचनप्रविद्म। त्वंवेत्थयतिते जात वेदः
स्वधाभिर्यज्ञꣳसुकृतंजुषस्व ॥ ६ ॥ अमुक
गोत्रः अस्मत्प्रपितामहः अमुक शर्मा आदित्य
स्वरूपस्तृप्यतां इदं जलं तस्मै स्वधानमः ॥
ओं मधुवाताऋतायते मधुक्षरन्ति सिन्धवः ।
माध्वीनः सन्त्वोषधीः ॥ ७ ॥ अमुक गोत्रः
अस्मत्पितामहः आदित्यस्वरूपः तृप्यतां इदं
जलं तस्मै स्वधानमः ॥ ओं मधुनक्तमुतो-
षसो मधुमत्पार्थिवꣳ रजः मधुद्यौरस्तुनः

पिता ॥ ८ ॥ अमुक गोत्रः अस्मत्प्रपितामहः आदित्य स्वरूपस्तृप्यतां इदं जलं तस्मै स्वधानमः ॥ ओं मधुमान्नोऽवनस्पतिर्म्मधुमां अस्तु सूर्यः। माध्वीगावोभवन्तुनः ओं मधु। मधु। मधु॥

अमुक गोत्रा अस्मन्माता अमुकदा गंगारूपा तृप्यतामिदं जलं तस्यै स्वधानमः। अमुक गोत्रा अस्मन्माता अमुकदा गंगारूपा तृप्यतामिदं जलं तस्यै स्वधानमः। अमुक गोत्रा अस्मन्माता अमुकदा गंगारूपा तृप्यतामिदं जलं तस्यै स्वधानमः ॥

अमुक गोत्रा अस्मत्पितामही अमुकदा यमुना रूपा तृप्यतामिदं जलं तस्यै स्वधा नमः। अमुक गोत्रा अस्मत्पितामही अमुकदा यमुनारूपा तृप्यतामिदं जलं तस्यै स्वधा नमः। अमुक गोत्रा अस्मत्पितामही अमुकदा यमुनारूपा तृप्यतामिदं जलं तस्यै स्वधा नमः

अमुक गोत्रा अस्मत्प्रपितामही अमुकदा गंगायमुनारूपा तृप्यतामिदं जलं तस्यै स्वधानमः। अमुक गोत्रा अस्मत्प्रपितामही अमुकदा गंगायमुनारूपा तृप्यतामिद जलं तस्यै स्वधानमः। अमुक गोत्रा अस्मत्प्रपितामही अमुकदा गंगायमुनारूपा तृप्यतामिदं जलं तस्यै स्वधानमः॥

अमुक गोत्रा अस्मत्सापत्नमाता अमुकदा गंगारूपा तृप्यतामिदं जलं तस्यै स्वधानमः।

इति त्रिवारं अञ्जलीन्दद्यात। "तथा च सापत्न पितामही प्रपितामहीभ्यां नामगोत्र पूर्वकं त्रीन्त्रीनञ्जलीन्दद्यात्।"

ओं तृप्यध्वम्। तृप्यध्वम्। तृप्यध्वम्।

"पश्चात् मन्त्रं पठेत्।"

ओं नमोवः पितरो रसाय नमोवः पितरः शोषाय नमोवः पितरोजीवाय नमोवः पितरःस्वधायै नमोवः पितरो घोराय नमोवः पितरो मन्यवे नमोवः पितरः पितरो नमो-

वो गृहान्नः पितरोदत्त सतोवः पितरो देष्मम तद्वः पितरो वास आधत्त ॥ १ ॥ ओं आधत्त पितरो गर्भंकुमारम्पुष्करस्रजम् । यथेह पुरुषोसत् ॥ २ ॥

"द्वितीय गोत्रम् ।"

अमुक गोत्रः अस्मन्मातामहः अमुक शर्मा विष्णुरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः । इदं जलं तस्मै स्वधा नमः । इद० । अमुक गोत्रः अस्मत्प्रमातामहः अमुक शर्मा हरिरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः । इदं जलं तस्मै स्वधानमः। इद० ॥ अमुक गोत्रः अस्मद्वृद्धप्रमातामहः अमुक शर्मा आदित्यरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः । इदं जलं तस्मै स्वधा नमः । इद० ॥ अमुक गोत्रा अस्मन्मातामही अमुकदा गङ्गारूपा तृप्यतामिदं जलं तस्यै स्वधानमः। इदं जलं तस्यै स्वधानमः । इद० ॥ अमुक

गोत्रा अस्मत्प्रमातामही यमुनारूपा तृप्यतामिदं जलं तस्यै स्वधानमः । इदं जलं तस्यै स्वधा नमः । इद० ॥ अमुक गोत्रा अस्मद्वृद्धप्रमातामही गङ्गायमुनारूपा तृप्यतामिदं जलं तस्यै स्वधानमः । इदं जलं तस्यै स्वधा नमः । इद० ॥

"पत्न्यादि गोत्रम्" ।

अमुक गोत्रा अस्मत्पत्नी(१)अमुकदा गंगारूपा तृप्यतामिदं जलं तस्यै स्वधानमः । इदं जलं तस्यै स्वधानमः । इदं जलं० ॥

अमुक गोत्रः अस्मत्सुतः(२) अमुक शर्मा विष्णुरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः । इदं जलं तस्मै स्वधानमः । इदं ०॥

(१) पत्न्याद्याप्तान्त पितृगणस्य अस्मत्पत्नी अस्मत्पितृव्य इत्यादि सम्बन्धं गोत्रं नामानुच्चार्य वसुरूपं त्रींस्त्रीनञ्जलीन्दत्वा तर्पणंकुर्यात् ॥ (२) यदि तस्य भार्यासुतो वा मृतस्तर्हि सपत्नीकः ससुत इत्यूहः कार्यः । एवं पितृव्यादौ ज्ञेयम् । सुतादीनां बहुत्वे ज्येष्ठाद्यनुक्रमोग्राह्यः ॥

अमुक गोत्रा अस्मत्कन्या(३) अमुकदा गंगायमुनारूपा तृप्यतामिदं जलं तस्यै स्वधानमः। इदं जलं तस्यै स्वधानमः। इदं०॥

अमुक गोत्रः अस्मत्पितृव्यः अमुक शर्मा विष्णुरूपस्तृप्यतामिदं जलं तस्मै स्वधानमः। इदं जलं तस्मै स्वधानमः। इदं०॥

अमुक गोत्रा अस्मत्पितृव्यपत्नी गंगा-यमुनारूपा तृप्यतामिदं जलं तस्यै स्वधा नमः। इदं जलं तस्यै स्वधानमः। इदं०॥

"एवं द्वितीय तृतीयादय पितृव्याणां"।

अमुक गोत्रः अस्मन्मातुलः(४) अमुक शर्मा विष्णुरूपस्तृप्यतामिदं जलं तस्मै

(३) यदि तस्या भर्तासुतो वा मृतस्तर्हि सभर्तृका सुता इत्युहः कार्यः एवं पितृभगिन्यादौ।

(४) एवं द्वितीयतृतीयादयो ग्राह्यः॥

स्वधानमः । इदं जलं तस्मै स्वधानमः । इदं० ॥

अमुक गोत्रा अस्मन्मातुलपत्नी अमुकदा गंगारूपा तृप्यतामिदं जलं तस्यै स्वधानमः। इदं जलं तस्यै स्वधानमः । इदं० ॥

अमुक गोत्रः अस्मद्भ्राता(५) अमुक शर्मा विष्णुरूपस्तृप्यतामिदं जलं तस्मै स्वधानमः । इदं जलं तस्मै स्वधानमः । इदं० ॥

अमुक गोत्रा अस्मद्भ्रातृपत्नी अमुकदा गंगारूपा तृप्यतामिदं जलं तस्यै स्वधानमः। इदं जलं तस्यै स्वधानमः । इदं० ॥

अमुक गोत्रः अस्मत्सापत्नभ्राता अमुक शर्मा विष्णुरूपस्तृप्यतामिदं जलं तस्मै स्वधानमः । इदं जलं तस्मै स्वधानमः । इदं० ॥

---

( ५ ) एवं सपत्नभ्राता सापत्नभगिनी च ग्राह्याः ॥

अमुक गोत्रा अस्मत्सापत्नभ्रातृपत्नी अमुकदा गंगारूपा तृप्यतामिदं जलं तस्यै स्वधानमः। इदं जलं तस्यै स्वधानमः। इदं०॥

अमुक गोत्रा अस्मत्पितृभगिनी अमुकदा (सभर्तृका) तृप्यतामिदं जलं तस्यै स्वधा नमः। इदं जलं तस्यै स्वधानमः। इदं०॥

अमुक गोत्रा अस्मन्मातृभगिनी अमुकदा (सहभर्तृका) तृप्यतामिदं जलं तस्यै स्वधानमः। इदं जलं तस्यै स्वधानमः। इदं०॥

अमुक गोत्रा अस्मदात्मभगिनी अमुकदा (सहभर्तृका) तृप्यतामिदं जलं तस्यै स्वधानमः। इदं जलं तस्यै स्वधानमः। इदं०॥

"एवं सापत्नभगिन्यादीनपि तर्पयेत्"।

अमुक गोत्रः अस्मच्छ्वशुरः अमुक शर्मा

तृप्यतामिदं जलं तस्मै स्वधानमः। इदं जलं तस्मै स्वधानमः। इदं० ॥

अमुक गोत्रा अस्मत्पत्नीमाता अमुकदा तृप्यतामिदं जलं तस्यै स्वधानमः। इदं जलं तस्यै स्वधानमः। इदं० ॥

"एवं पत्नीभ्रातादयोऽपि"।

अमुक गोत्रः अस्मद्गुरुः अमुक शर्मा विष्णुरूपस्तृप्यतामिदं जलं तस्मै स्वधानमः। इदं जलं तस्मै स्वधानमः। इदं० ॥

"ततः गुरुपत्नी"।

अमुक गोत्रः अस्मच्छिष्य अमुकशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः। इदं जलं तस्मै स्वधानमः। इदं० ॥

अमुक गोत्रः अस्मत्सखा अमुक शर्मा तृप्यतामिदं जलं तस्मै स्वधानमः। इदं जलं तस्मै स्वधानमः। इदं० ॥

अमुक गोत्रः अस्मद्दासः अमुक शर्मा

त्रिष्णु रूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः। इदं जलं तस्मै स्वधानमः। इदं०॥

ॐ आब्रह्मस्तम्ब पर्यन्तं देवर्षि-पितृ मानवाः। तृप्यन्तु पितरः सर्वे मातृ मातामहादयः॥ १॥ अतीतः कुलकोटीनां सप्तद्वीप निवासिनाम्। आब्रह्मभुवनाँल्लोकादिदमस्तु तिलोदकम्॥ २॥ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः। ते सर्वे तृप्तिमायान्तु मया दत्तेन वारिणा॥ ३॥

"इति मंत्रैः पृथक्पृथक्तिलमुदकं दद्यात्" (वस्त्रनिष्पीडनं) "वस्त्रं चतुर्धाकृत्वा भूमौवामभागे निष्पीडयेत। तर्पितजले पवित्रं विसृजेत्। (यदि गृहे मृतनिथौ सांवत्सरिक श्राद्धादि कर्मस्यात्तर्हि 'वस्त्रनिष्पीडन' न कुर्यादिति)" तत्र मंत्रः।

ये के चास्मत्कुले जाता अपुत्रागोत्रिणोमृताः। ते गृह्णन्तु मयादत्तं वस्त्रनिष्पीडनोदकम्॥

"इति वस्त्रनिष्पीडनम्"।

सव्येन शुद्धोदकेनाचम्य प्राणायामं कुर्यात्॥ "ततोऽर्घ्यं" "पत्रे सव्येन शुद्धोदकं पूरयित्वा तन्मध्येऽनामिकया 'षडङ्ग

कृत्वा तत्पात्रे श्वेतगन्धाक्षत पुष्पाणि तुलसीदलानि च प्रक्षिप्य पश्चाद्देवेभ्योऽर्घ्यं तर्पित जलपात्रे दद्यात् ।

'अर्घः' ॐ ब्रह्मज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः । सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनि मसतश्चव्विवः ॥ १ ॥ ओं ब्रह्मणे नमः ॥ ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाᳪ सुरे स्वाहा ॥ ओं विष्णवे नमः ॥ २ ॥ ओं नमस्ते रुद्रमन्न्यवऽउतोतऽइषवे नमः । बाहुभ्यामुतते नमः ॥ ओं रुद्राय नमः ॥३॥ ओं तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ओं सवित्रे नमः ॥ ४ ॥ ओं मित्रस्य चर्षणी धृतो वो देवस्य सानसि । द्युम्नञ्चित्रश्श्रवस्तमम् ॥ ओं मित्राय नमः ॥५॥ ओं इमम्मे वरुणश्श्रुधी हवमद्द्या च मृडय । त्वामवस्युराचके ॥ ओं वरुणाय नमः ॥ ६ ॥

"सूर्योपस्थानम्"

ओं अदृश्रमस्य केतवो विरश्मयो-जनांऽअनुभ्राजन्तोऽअग्नयो यथा। उपयाम गृहीतोसि सूर्य्यायत्वाभ्राजायैष ते योनिः सूर्य्यायत्वाभ्राजाय सूर्य्यभ्राजिष्ठःभ्भूजिष्ठ स्त्वन्देवेष्ववसिभ्भ्राजिष्ठोहम्मनुष्येषु भूयासम् ॥ १ ॥ ओं हꣳ सः शुचिषद्वसुरन्तरिक्ष-सद्धोतावेदिषदतिथिर्दुरोणसत्। नृषद्वर सदृतसद्व्योम सदब्जा गोजाऽऋतजाऽअ-द्रिजाऽऋतम्बृहत् ॥ २ ॥

"दिग्देवतानां नमस्काराः"

प्राच्यै—ओं इन्द्राय नमः ॥१॥ आग्ने-य्यै—ओं अग्नये नमः ॥२॥ दक्षिणायै—ओं यमाय नमः ॥३॥ नैर्ऋत्यै—ओं निर्ऋतये नमः ॥४॥ पश्चिमायै—ओं वरुणाय नमः ॥५॥ वायव्यै—ओं वायवे नमः ॥६॥ उदिच्यै-ओं सोमाय नमः ॥७॥ ईशान्यै—ओं ईश

नाय नमः ॥८॥ ऊर्ध्वायै—ओं ब्रह्मणे नमः ॥९॥ अधस्तात्—विष्णवे नमः ॥१०॥ अवाच्यै—ओं अनन्ताय नमः ॥११॥ जलमध्ये-ओं ब्रह्मणे नमः। ओं अग्नये नमः। ओं पृथिव्यै नमः। ओं ओषधिभ्यो नमः। ओं वाचे नमः। ओं वाचस्पतये नमः। ओं महद्भ्यो नमः। ओं अपास्पतये नमः। ओं वरुणाय नमः।

"मुखविमार्जनम्" (शुद्धोदकेन 'संवर्चसेति' मंत्रेण मुखं विमृजेत् ) तत्र मंत्रः।

ओं संव्वर्च्चसा पयसा सन्तनूभिरगन्महि मनस सꣳ शिवेन। त्वष्टा सुदत्रो-व्विदधातु रायो नुमार्ष्टु त्तन्वो जद्विलिष्टम्॥१॥

"विसर्जनम्"।

ओं देवा गातु विदो गातुं व्वित्वा गातुमित। मनसस्पत इमन्देव यज्ञꣳ स्वाहा व्वातधाः॥१॥

'अर्पणम्' ।

अनेन यथा शक्ति देव ऋषि मनुष्य पितृ तर्पणाख्येन कर्मणा भगवान् मम समस्त पितृ रूपी जनार्दन वासुदेवः प्रीयतां न मम ॥ ओं तत्सद्ब्रह्मार्पणमस्तु। ओ गया गदाधर-स्तृप्यतु । ओं विष्णवे नमः । ओं विष्णवे नमः । ओं विष्णवे नमः ॥

इति शुक्ल यजुर्वेदान्तर्गत माध्यन्दिनीय शाखाध्यायिनो शांडिल्यगोत्र हरितवालिय गौड़ब्राह्मण पण्डित हीरालाल शर्मन्तेऽङ्कजनुषा वैद्यनाथ मिश्रेण रचितो देवर्षि-मनुष्य-पितृतर्पण प्रयोग समाप्तिमगमत् ।



# सूचना

—:❀:—

सम्पूर्ण माननीय विद्वान् महात्मा सज्जनोंको सहर्ष सूचित किया जाता है कि भारत-विख्यात **श्रीवेङ्कटेश्वरस्टीम प्रेस बम्बई** की छपी समस्त पुस्तकें, जैसे वैदिक, वेदान्त योगशास्त्र, न्याय, धर्मशास्त्र, कर्मकाण्ड, पुराण, इतिहास, व्याकरण, ज्योतिष, वैद्यक, राजनीति, अलङ्कार, छन्द, कोष, काव्य, नाटक, साम्प्रदायिक, अनुष्ठान, मन्त्रशास्त्र, स्तोत्र-पाठ, सङ्गीतराग, उपन्यास, बालकोपयोगी, स्त्रियोपयोगी, संस्कृत, हिन्दी भाषाके ग्रन्थ मिलनेकी सुविधा आजतक कलकत्तेमें नहीं थी। इसका यथोचित प्रबन्ध करके यह अभाव दूर कर दिया गया है। आशा है एक बार आप लोग पुस्तकालयमें पधारकर उत्साहित करेंगे। इस पुस्तकालयमें उपरोक्त प्रेसके अतिरिक्त पूना, निर्णयसागर प्रेस, गुजराती प्रिंटिंग प्रेस, काशी लखनऊ बनारस आदि स्थानोंकी समस्त पुस्तकें भी मिलेंगी। और हमारे यहाँ अप्राप्त पुस्तकें जर्मनी तथा विलायतकी भी उचित मूल्यमें मिल सकती हैं।

भवदीय—

**मैनेजर—श्रीवेङ्कटेश्वर पुस्तक एजेन्सी,**

१९५।२, हरिसन रोड, कलकत्ता।

प्रकाशक—मुन्शी आनन्दीलाल बुक्सेलर,
उज्जैन, ग्वालियर।

## पुस्तक मिलनेका पताः—

१—शेखावाटी भूषण पं० हीरालाल हरिदत्ताचार्य मिश्र, उज्जैन।

२—बाबू आनन्दीलाल बुक्सेलर, चौक उज्जैन।

३—श्रीवेङ्कटेश्वर पुस्तक एजेन्सी, १९५।२, हरिसन रोड, कलकत्ता।

४—कन्हैयालाल ब्रजभूषण दास बुक्सेलर, कचौरी गली, काशी।

पं० नरोत्तम व्यास द्वारा 'श्रीनारायण प्रिण्टिङ्ग वर्क्स',
८, चितपुर रूपर, (मछुआबाजार) कलकत्तामें मुद्रित।